॥ श्रीमते रामानन्दाचार्य्याय नमः ॥

# श्रीयुगल सहस्रनाम स्तोत्रम्

एकदा नारदो योगी परानुग्रह वाञ्छया । पर्य्यटन् सकलाँल्लोकान्सत्यलोकमुपागमत् ।
ददर्श तत्र ब्रह्माणं ध्यानानन्दं ननाम सः । कृताञ्जलिपुटो भूत्वा पप्रच्छ विनयान्वितः ॥
कस्मिन्सानन्दमन्तस्थे रमसे त्वं मुहुर्मुहुः । कथयस्व पितश्चाद्य परमानन्दकारणम् ॥३॥

ब्रह्मोवाचः—

शृणु वत्स प्रवक्ष्यामि परमानन्दकारणम् । वशिष्ठो मत्सुतश्चात्र साम्प्रतं कथितोऽग्रतः ॥४॥
श्रीसीतारामयोर्दिव्यं माधुर्य्यचरितं वरम् । सहस्रनाम युगलं यदभूत्परिणयोत्सवे ॥५॥
शतानन्दवशिष्ठौ च शाखोच्चारेषु चक्रतुः । तेनाहं कथितश्चाद्य वशिष्ठेन महात्मना ॥६॥
अतः स्मितास्योऽहं वत्स परमानन्दकारणम् । पितुर्वचनमाकर्ण्य नारदो विनयान्वितः ॥७॥
पप्रच्छ पितरं सम्यक्छ्री सीतारामयोः शुभम् । यदि त्वं मे प्रसन्नोसि कथयस्वेति मामिदम् ॥
को विधिः क ऋषिर्देवः को मन्त्रो बीजशक्तिकः । अङ्गन्यासं करन्यासं पठित्वा किं फलं लभेत् ॥
फलं सहस्रनाम्नां किं सीतारामयुगस्य हि । कृत्स्नं वदस्व मामद्य प्रीतिर्मे यदि जायते ॥१०॥

कृपानुग्रह पूर्वक परोपकार परायण श्रीनारद योगी एक बार घूमते फिरते ब्रह्मलोक में गये । वहाँ ध्यानानन्द में निमग्न श्री ब्रह्मा जी को श्रीनारदजी ने हाथ जोड़ प्रणाम कर विनय पूर्वक पूछा कि प्रभो ! आप अन्तःकरण में किस आनन्द में रमण करते हुए बारम्बार विभोर हो रहे हैं ? उस परमानन्द का कारण हे पिता जी ! आज हमको भी सुनाइये ।

श्रीब्रह्माजी ने कहा—हे वत्स ! अपने परमानन्द का कारण तुमको सुनाता हूँ सो सुनो ! अभी मेरे पुत्र वशिष्ठ ने मेरे सामने श्री सीताराम जी का माधुर्य्य रसभरा दिव्य चरित्र सुनाया है । जो उनके विवाहोत्सव पर श्री जनकपुर धाम में शतानन्द तथा महात्मा वशिष्ठ ने युगल सहस्रनाम शाखोच्चार के प्रसङ्ग में कहा था । उसका वर्णन वशिष्ठ ने मुझको सुनाया है- उसी को स्मरण कर करके मैं आनन्द में निमग्न हो रहा हूँ । वही मेरे परमानन्द का कारण है । पिताजी का ऐसा वचन सुनकर श्रीनारदजी ने विनय पूर्वक कहा कि हे पिताजी ! यदि आप मुझपर प्रसन्न हैं तो परम शुभ श्रीसीतारामजी का यह युगल सहस्रनाम मुझे भी श्रवण कराइये । उसकी विधि क्या है ? ऋषि कौन है ? देव कौन है ? बीज क्या है ? शक्ति क्या है ? अङ्गन्यास करन्यास कैसे करे ? उसका पाठ करने का फल क्या है ? सब पूर्ण रीति से मुझसे कहिये । ( श्लोक १ से १० तक )

ॐ अस्य श्रीसीतारामसहस्रनामयुगलमाधुर्यस्तोत्रमन्त्रस्य ब्रह्माऋषिरनुष्टुप्छन्दः। श्रीरामचन्द्रपरमात्मा देवता । श्रीजानकीशक्तिः । श्रीजानकीरामचन्द्र प्रीत्यर्थे जपे विनियोगः । "प्रथमन्त्रबीजम्" । ॐ ह्लीं ह्लीं श्रीं जानकी रामचन्द्राय नमः । "अथ करन्यास" ॐ ह्लीं अङ्गुष्ठाभ्यां नमः । ॐ ह्लीं तर्जनीभ्यां नमः । ॐ श्रीं मध्यमाभ्यां नमः । ॐ जां अनामिकाभ्यां नमः । ॐ नं कनिष्ठिकाभ्यां नमः । ॐ कीं करतल करपृष्ठाभ्यां नमः । "इति करन्यासः ।" ॐ रां हृदयाय नमः । ॐ श्रीं शिरसे स्वाहा । ॐ मां शिखायै वषट् । ॐ श्रीं कवचाय हुम् । ॐ ह्लीं नेत्रत्रयाय वौषट् । ॐ ह्लीं ह्लीं क्लीं क्लीं अस्त्रायफट् ॥ "इति अङ्गन्यासः" । अथ ध्यानम्—

ध्याये स्वर्णाभकान्ति सरसिजनयनां पूर्णचन्द्र स्मितास्यां—
सीतां रामस्य वामां प्रहसितवदनां सुन्दराकार देहाम् ।
विद्युत्पुञ्जाभ वस्त्रां बहुमणिखचितान्भूषणान्काञ्चनानां—
बिभ्रन्तीमम्बुजाक्षीं धृतशिरशुमनैं मंञ्जुलं रत्नमौलिम् ॥१२॥

श्रीनारदजी का ऐसा प्रश्न सुनकर श्रीब्रह्माजी ने कहा कि हे वत्स ! सुनो "श्रीसीताराम युगल सहस्रनाम" में तुमको सुनाता हूँ । जिसका पाठ करने से तथा पढ़ा न हो तो पाठ सुनने से वह तीन त्रिलोकी जीतकर प्रभु का प्यारा बन जाता है । ऐसा कह कर श्रीब्रह्माजी ऊपर लिखा हुआ सङ्कल्प अङ्गन्यास करन्यास आदि समझाकर ध्यान बताते हैं—

स्वर्ण के समान जिनके देह की दिव्यकान्ति हैं, कमल के समान विशाल नयन हैं, पूर्णचन्द्र के समान मन्दस्मित हँसता हुआ मधुर मुखारविन्द हैं, सर्वाङ्गसुन्दर मनोहर देह हैं, बिजली की भाँति चमकते हुए वस्त्र तथा मणि रत्नों से जटित कञ्चन के विचित्र आभूषण धारण किये हैं । ऐसी सिर पर रत्न की मोरी तथा पुष्प धारण किये हुए श्रीरामकान्ता श्रीसीताजी का ध्यान करके यह "श्रीसीताराम युगल सहस्र नाम स्तोत्र" का पाठ करना चाहिये ।—

सीरध्वजात्मजा सीता जानकी यज्ञभूमिजा । रघुराट् रामचन्द्रश्च श्रीमद्दशरथात्मजः ॥
मैथिली मिथिलापुत्री मिथिलेश्वरनन्दिनी । कौशल्येयश्च काकुत्स्थः कौशल्यानन्दवर्धनः ॥
धरात्मजा धराबाला धरानन्दविवर्द्धिनी । रघुवंशो राघवेन्द्रो राघवानन्ददायकः ॥
विदेहपुत्री वैदेही विदेहानन्दवर्द्धिनी । विश्वामित्रानुगामी च ताड़कारिःपिनाकहा ॥
मिथिलापुण्यकर्त्री च मिथिलानन्दपूरिणी । विश्वामित्रमखत्राता सुबाहुप्राणहानकः ॥
मिथिलेशकिशोरी च मिथिलेश कुमारिका । काकुत्स्थवंशप्रभवः काकुत्स्थकुलदीपकः ॥

धरणीगर्भसम्भूता धराकन्या धरासुता । अयोध्याधिपति र्वीरः सरयूतटक्रीडनः ॥१९॥
विदेहवंशप्रभवा विदेहकुलभूषणा । दिनेशवंश प्रभवो रघुवंशविभूषणः ॥२०॥
रसात्मजा रसासुत्री सुनयनाक्रोडखेलिनी । अयोध्यापालको धन्यः सुमित्रापुत्रसेवितः ॥२१॥
गिरिजापूजनरता— सरोजवन क्रीडिनी । कोदण्ड खण्डकर्त्ता च भृगुगर्वविनाशकः ॥२२॥
राम वामाङ्गशोभाढया रामभार्य्या विलासिनी । भार्गव थ तिहृच्छान्तो विदेहाधिपपूजितः॥२३॥
*मुनितेजससम्भूता मुनिराजकुमारिका । कैकेयी पुत्रयशगः श्रीमांश्च लक्ष्मणाग्रजः ॥२४॥
विदेहराजदुहिता कामेश्वर शिवार्चिनी । मिथिलादर्शनाभोगी मिथिलेशादि वन्दितः ॥२५॥
कौशल्यापुत्रपत्नी च कौशल्यापुत्र शोभिता । कौशल्यागर्भसम्भूतः कौशल्यास्तनपानकृत् ॥२६॥
दशरथस्नुषा दिव्या दशरथसुतवल्लभा । मिथिलेश्वरजामाता श्रजनन्दननन्दनः ॥२७॥
सोमवंशसमुद्भूता सूर्यवंशविवाहिता । कोशलेशकुमारश्च कोशलापालनक्षमः ॥२८॥
लाङ्गलाग्रप्रकटिता पञ्चवर्षशरीरिणी । हव्यपिण्डसमुद्भूतो मुनीशैर्वद्र्शोधितः ॥२९॥
उर्मिलासहयानस्था कौतुकागारशोभिता । सीतावाममभागी च लक्ष्मणानुचरप्रियः ॥३०॥
इरावती तोपतृप्ता उर्विजाकुण्डपुण्यदा । सरयूजलतृप्तात्मा सरयूपुण्यक्षेत्रकृत् ॥
सरयूस्नानरसिका मन्दारवनकेलिनी । अहल्यापावनश्चैव काञ्चनारण्यवासकृत् ॥
कौशल्याद्याःशुश्रूषन्ती राममातृसुलालिता । धनुर्बाणधरश्चैव सन्तानवनकेलिकृत् ॥
अवनीनन्दिनी रामा रामानन्द प्रदायिनी । सीतामुखारविन्दालिः सीताप्रीतिपरायणः ॥
कौशल्यां वीजयन्तीं च कौशल्यागृहलेपिनी । कौशल्यादत्तकमलः कौशल्यादत्तभूषणः ॥
कौशल्यायै नमस्कर्त्री कौशल्याप्रलापिनी । सीतानर्मप्रियश्चित्तः सीतामन्दस्मितोन्मुखः ॥
दाडिमी कुसुमौष्ठी च नीलरत्नद्विजावली । राजाधिराजपुत्रश्च मृगयालोभतत्परः ॥
रामशय्यां शोधयन्ती रामताम्बूलदायिनी । सीताविलासरसिकः सीताशृङ्गार साधकः ॥
रत्नशय्यां स्थितवती रामाज्ञापरिपालिनी । सीताशीलमहानन्दः सीताकन्दुकताडितः ॥
प्रमोदारण्यक्रीडन्ती शुभगादिविहारिणी । महारासकरस्तत्र गीतानन्द प्रदायकः ॥
हिंडोललीलारसिका हिण्डोल गीत गायिका । सीतागान श्रवणादः सीतादर्शनलोलुपः ॥
स सखी पुष्पलुनती माला कन्दुक साधिनी । सर्वशृङ्गारसम्पन्नः सीतासम्मुखप्रापकः ॥
सखीलज्जाकुतमुखी निजमन्दिर गामिनी । पितृलज्जालुनयनः पितृसम्मुखप्रापकः ॥

* मुनिशोणितसम्भूता इति पाठान्तरः ।

अम्भोजधूलिगौराङ्गी नीलरत्नाम्बरावृता । नीलरत्नप्रतीकाश पीताम्बर वरावृतः ॥४४॥
कोमलाङ्गी विशालाक्षी सुन्दरी गजगामिनी । काकपक्षधरः शुभ्रः कम्बुग्रीवः स्मिताननः ॥
पद्मिनी हंसगमना रामशोभाब्धिसंस्थिता । सीतामुखाब्जमार्तण्डः श्रीमान् दाशरथिःसुधीः ॥
स्वाम्यग्रे तिष्ठती नित्यं लाजाहोमं प्रकुर्वती । सीताग्रकृत श्रीरामो वह्निाग्निं संप्रदक्षिणः ॥
अस्मारोहयदा सीता विवाहविधिसंस्कृता । सिन्दूरसीताशिरदः विदेहकरस्वस्तिकृत् ॥
ललिताम्बरधरा सीता सर्वालङ्कारसाधिनी । सपत्नी ग्रन्थिबन्धश्च कौतुकागार मध्यगः ॥
युवतीप्रसाधिता सीता हविः कान्तसुखप्रदा । रामो लज्जालुनयनो जानकीसुखदो हविः ॥
रुदन्ती साश्रुनयना मातृकण्ठं न त्यक्ष्यति । स्वश्र्वोः पादनमस्कारी मैथिलेनाभिपूजितः ॥
मात्रा विसर्जिता सीता सुखकान्ता स गच्छती । श्रीरामो जानकीयुक्तः यानस्थश्चस्ववेश्मगः ॥
लज्जालुनयना सीता जानकीगातपश्यतीं । गच्छमानः स्वनगरं भार्गवं विमदं कृतम् ॥
परशुरामपूजिता सौभाग्यवरलाभिनी । शिरोमौरधरः कान्तो निजमन्दिरद्वारगः ॥
श्वसुरद्वारगा सीता राजद्वाराभिपूजिता । कान्तासहितरामस्तु कौतुकागार शोभितः ॥
राजाङ्गनामध्यसंस्था गुरुभार्य्यासदानता । गुणाकरो रासकारी जयशीलाति केलिकृत् ॥
रत्नसिंहानस्था च शुभगा कमलावृता । मन्दस्मितो मनस्तनुर्युवतीमण्डलस्थितः ॥
रम्भास्वरोमा विर्जिता रम्भाद्यानृत्य भाविता । कोमलाङ्गो घनश्यामो विवाहभूषणाम्बरः ॥
जानकीरूपशीलादौ सर्वनारी प्रशंसिता । प्रियालावण्यमग्नात्मा प्रियाशृङ्गारसाधकः ॥
अयोध्यापुरमाप्नोति परमाह्लाद दर्शिनी । जानकीसहपश्यन् वै हाटशोभा मनोहरा ॥
यौवराज्यश्रुताहर्षा स्वर्णरत्नादिदानदा । वशिष्ठाज्ञाकृतः शुद्धः यौवराज्याभिसंयमः ॥
पतिदेवरसहिता वनवासमुपगच्छती । शृङ्गवेरपुरे प्राप्तः पितुराज्ञापुरस्कृतः ॥
गङ्गाविनय कर्त्री च गङ्गापारोत्तरानुगा । निषादमित्रम् परमो जटामण्डलधारकः ॥
सुमन्त्रहर्षदा धन्या रामलक्ष्मणमध्यगा । भरद्वाजाश्रमगतस्तृप्तश्च ऋषिपूजितः ॥
सुतीक्ष्णवन्दिता पूज्या शरभङ्गाश्रमवासिनी । शरभङ्गमुक्तिदाता च घटयोनिप्रपूजितः ॥
अनसूयाशिक्षितवती महाशृङ्गारशोभिता । अत्रिपूजागृहीतात्मा वाल्मीकिऋषिवन्दितः ॥
चित्रकूटनिवसिता रामोच्छिष्टप्रभोजिनी । पर्णशालानिवसितः कन्दमूल कृताशनः ॥
मन्दाकिनी स्नान कर्त्री मन्दाकिनिजलप्रिया । जयन्तनेत्रहर्त्ता च स्फटिकादिशिलास्थितः ॥
श्वश्रूदर्शनकर्त्री च गुरुपत्नी पदानता । भरतालिङ्गितो रामः गुरुपत्नी पदानतः ॥

श्वश्रूवाशिषं गृहिणी च श्वश्रूक्रोड निवासिनी । पितृश्राद्ध प्रकर्ता च इङ्गुदीफलपिण्डदः ॥
श्वश्रू शृङ्गाररचिता श्वश्रूशासनकारिणी । वशिष्ठाय नमस्कारी भरतायाङ्घ्रिपीठदः ॥
पञ्चवटीवासकर्त्री मायामृगविमोहिनी । मायामृगानुगामी च मारीचप्राणहारकः ॥
मायाहरणं कृतवती भूभारार्तिविनाशिनी । खरदूषणत्रिशिराविराधवधपण्डितः ॥
लङ्काशोकवनस्था च त्रिजटादिसुसेविता । कबन्धभुजभेत्ता च जटायुमोक्षदायकः ॥
शरमासखीकृतवती च श्रीरामविरहाकुला । शबरीमोक्षदाता च सुकण्ठमित्रपालकः ॥
एकवेणी ह्यधोदृष्टी राम रामविलापिनी । सीताशोकपरिश्रान्तो हनुमल्लक्ष्मणबोधितः ॥
शिंशपावृक्षमूलस्था निराहारा सुनिर्जला । सप्ततालविभेदी च बालिप्राणविनाशकः ॥
राक्षसीतर्जिता सीता त्रिजटादिविबोधिता । ताराविज्ञानदश्चैव ताराशोकविनाशकः ॥
दण्डकारण्यवसिता पुण्यदाक्षेत्रकारिणी । अङ्गदासेवितांघ्रिश्च सुग्रीवसुखसाधकः ॥
दशरथात्मजपत्नी च राक्षसीमध्यसंस्थिता । सुग्रीवराज्यदाता च रुमादुःखविनाशकः ॥
अशोकारामवसिता भयशोकविवर्द्धिनी । हनुमदंशवाही च सुग्रीवाद्यृक्षसंयुतः ॥
वननाशमहानन्दा हनुमद्बन्धनातुरा । प्रवर्षणगिरिस्थानः वर्षाऋतु विलोकनः ॥
लङ्कादग्धमहानन्दा रामगमनकांक्षिणी । सीताशोकाभिसंभीतः सुग्रीवादि विबोधितः ॥
सीरध्वजात्मजा बाला लङ्केश्वरपुरः स्थिता । समुद्रतीर गमनः सागरत्रासदायकः ॥
धात्री प्रकटमाना च असुरारण्यवासिता । समुद्रसेतुकरणः बालुकाशिवलिङ्गकृत् ॥
एकलापरगा माया लङ्कमारी प्रहेश्वरी । रामेश्वरार्चनरतो रामेश्वर मन्त्रजापकः ॥
वानराहवहर्षास्या दशास्यशापदायिनी । विभीषणशरणदः तस्मैराज्याभिसाधकः ॥
युद्धोद्यमश्रुतवती परमानन्दव्यापिनी । ऋक्षवानरसेनाढ्यस्त्रिकूटाचलवासकृत् ॥
राक्षसीप्रियवाक्षुब्धा राक्षसीत्राणतत्परा । सुग्रीवसचिवश्चैव विभीषणसहायवान् ॥
घोरसंग्रामश्रृण्वन्ती राक्षसीपरिचारिका । महायुद्धविचारी च द्वारे मर्कटप्रेरकः ॥
राक्षसीमध्यवसिता रामदर्शनचित्तदा । सुग्रीवयुद्धप्रहितो विभीषसहायवान् ॥
रामाशाजीवनधृता रामचिन्ताब्धिमग्नता । लक्ष्मणयुद्धहर्षास्यो मारुतात्मजवाहनः ॥
हनुमद्वाक्यकरणी चिरंजीवनदायिनी । कुम्भकर्णविनाशी च मेघनादमृतो सुखी ॥
लङ्कामारो श्रुताहर्षा सरमादिप्रहासिनी । प्रहस्तप्राणहरणो निकुम्भशिरश्छेदक ॥
निमिवंश किशोरी च निमिवंशप्रभूषणा । अकम्पन शिरश्छेदी इन्द्रयानस्थयुद्धकृत् ॥
श्रद्धाभि: राक्षसीस्नाता वस्त्राभरण भूषिता । रावणप्राणहर्ता च महाविजयप्रापकः ॥

निमिराजकिशोरी च रामनामाङ्कसंस्थिता । सीतालक्ष्मणसहितः पुष्पकस्थस्त्वसत्वम् ॥
अग्निगर्भधृता साध्वी कान्तक्रोडनिवासिनी । नन्दिग्रामागमनकृद्भरतादि विलोकनः ॥
अयोध्याप्रापितानन्दा गुरुपत्नीपदानता । गुरुपादनमस्कारी मातृणां पदवन्दितः ॥
राजशृङ्गाररचिता सर्वशोभाप्रसाधिता । तपस्वीवेषनिर्मुक्तः पितृराज्यप्रसाधकः ॥
महाराजासनस्था च रामवाम विराजिता । अयोध्याराज्यपालश्च प्रजानन्द प्रदायकः ॥
अयोध्येश्वर पत्नी च अयोध्यानन्दवर्द्धिनी । महाराजाधिराजश्च मारुतात्मजसेवितः ॥
लक्ष्मणेश्वरपत्नी च लक्ष्मणाग्रजवल्लभा । कोशलेन्द्रपुरेशश्च कोशलेन्द्रपुरीपतिः ॥
भरताग्रजवामस्था सभाशोभाप्रवर्द्धिनी । इक्ष्वाकुराज्यशास्ता च पृथिवीधर्मपालकः ॥
सुग्रीवपत्नी भजिता विभीषणप्रियार्चिता । रविराजकुलोद्भूतः कुलवृद्धानुपालकः ॥
द्विजपत्नीनमस्कर्त्री गुरुभार्याकृतार्चना । लक्ष्मणा प्रेमपात्रश्च लक्ष्मीकान्त प्रियंकरः ॥
वसुंधरात्मजा चैव वसुदा वसुधासुता । रघुराजकुलेशश्च रघुवीरो रघूत्तमः ॥
वासवीकन्यका श्यामा रघुराज कुलेश्वरी । रघुवंशी विशालाक्षो ह्ययोध्यापुरयक्षेत्रकृत ॥
वसुधागर्भसम्भूता जगतीधरपूजिता । । रविवंशकिशोरश्च रविपुत्रकुलोद्भवः ॥
क्षोणीसुता भुवनजा भूकन्या भुविनिर्गता । कौशलेयश्च काकुत्स्थः कल्याणः कमलेक्षणः ॥
उर्वीकन्या सुकेशी च मञ्जुघोषाविवेष्टिता । प्रमोदारण्य रामेप्सु रम्भानृत्यपरायणः ॥
प्रमोदारण्यरसिका प्रमोदारण्यभाविता । प्रमोदारण्यनटनः प्रमोदारण्यकेलिकृत ॥
प्रमोदारण्यनटनी प्रमोदारण्यकेलिनी । प्रमोदारण्यप्रीतात्मा प्रमोदारण्यप्रीतिकृत ॥
प्रमोदवनपुष्पाढ्या प्रमोदवनगायिनी । प्रमोदवनहर्षाख्यः प्रमोदारण्यरासकृत ॥
अयोध्यापालिका वन्द्या अयोध्यानृपप्रीतिदा । किशोरः कमनीयश्च कालाक्षः कामनाप्रदः ॥
हंसवंशेश्वरी हंसी हंसिनी हंसगामिनी । हंसवंशेश्वरी हंसो हंसराजसुतप्रियः ॥
पद्मिनी पद्मनयना पद्मगन्धविशन्मुखी । चन्द्रस्मित चकोराक्षश्चञ्चलश्चन्द्रवन्मुखः ॥
चन्द्रिका चन्द्रवदना चन्द्रहारविभूषिता । चन्द्रमालालितश्चान्द्रो हरिचन्दनचर्चितः ॥
चन्दनालिप्तसर्वाङ्गी चन्दनामोदमोदिनी । चन्दनागुरुगन्धाढ्यश्चन्दनार्चनसुप्रियः ॥

> कल्याणं वो विधत्तां त्रिभुवनजननी जानकी भूमिजाता–
> चिच्छक्तिर्वासुदेवे हरिहरनिकरे पञ्चतत्त्वेनुचन्द्रे ॥
> विभ्रन्ती पाणियुग्मे सरसिजकलिका मालिकां रामकण्ठे–
> गच्छन्ती राजरङ्गे सखिगणसहिता दातुमम्भोरुहाक्षी ॥ १२० ॥

इस प्रकार श्री ब्रह्मा जी ने श्रीनारदजी से "श्रीसीताराम युगल सहस्रनाम" जिसके आधे श्लोक में श्री जानकी जी का तथा आधे में श्रीरामजी के नामों का कीर्तन है ऐसे श्लोक १२ वें से श्लोक ११० पर्यन्त १०८ श्लोकों में मङ्गलमय इस स्तोत्र का वर्णन किया । अब अन्तिम मङ्गलकामना करते हुए कहते हैं कि—

जिनकी दिव्य चेतना वासुदेव प्रभु तथा शिव ब्रह्मादि देवगणों में पञ्चतत्वों में ऊषा चन्द्र सूर्य में प्रकाशित हो रही है । जो अपने दोनों सुकोमल हाथों में कमल की कलियों की बनी सुन्दर जयमाला लिये हुए श्रीरामजी के कण्ठ में पहनाने के लिये सखीगणों के रङ्गभूमि के विशाल रङ्गमञ्च पर जा रहीं हैं ऐसी त्रिभुवन की माता, कमलनयनी श्रीजानकीजी आप सब के कल्याण का विधान करें ॥ १२० ॥

स्वर्णाम्भोजाभवर्णा सरसिजनयना पूर्णचन्द्रामृतास्या—
पश्यन्ती रामरूपं परिकररचितं चापखण्डं तमेकम् ।
शृण्वन्ती चारुशब्दं जय जय विमलं देवताब्राह्मणानां—
विप्राण्याराधिताद्या ऋषिजनकसुता पातु मां सर्वदा सा ॥१२१॥

सुनहरे कमल के समान जिनका गौरवर्ण है, कमल के समान जिनके विशाल नयन हैं पूर्ण चन्द्रमा के समान अमृत से परिपूर्ण जिनका मुख है, जो परिकरों के द्वारा सुन्दर सिंगार किया हुआ श्रीरामजी का स्वरूप तथा उनके ही हाथ से टूटे हुए धनुष का एक टुकड़ा गम्भीर दृष्टि से देख रही हैं, जो देवताओं तथा ब्राह्मणों के मुख से जय जयकार का निर्मल शब्द सुन रहीं हैं, ऐसी ब्राह्मणियों द्वारा आराधित आधारशक्ति राजर्षि जनकजी की कन्या श्रीजानकीजी मेरी सर्वदा रक्षा करें ॥ १२१ ॥

यः कोदण्डमतोलयद् गिरि सुतापाथोजपादार्चको ।
दर्भैस्तोयतिलैश्च श्रीरघुपतेः पाणौ स्थितो भूषितः ।
यो वै कौतुकमन्दिरे युवतिभिः प्रादाद्धविस्तन्मुखे—
सः सीताकरपङ्कजोऽवतु सदा यो बाहुमूले स्थितः ॥१२२॥

जिसने श्रीशंकरजी के धनुष को खेलते हुए उठाकर तौला है, जो श्री गिरिजा महरानी के श्री चरणों की पूजा करने वाला है, कोहबर कुंज में (कौतुक मन्दिर में) युवतियों के साथ जिसने श्रीराम मुख मे हविष्यान्न प्रदान किया है, तथा जो बाहुमूल में विराजमान है श्रीसीताजी का वह कर कमल सदैव हमारी रक्षा करे ॥ १२२ ॥

यः सिद्धैर्मुनिपुङ्गवैः सुरगणैः संसेवितः पूजितोः—
ब्रह्मेशान पुरन्दरादिभिरलं श्रीखण्डसंचर्चितः ।

भक्तानां भवबन्धतापहरणस्तीर्थास्पदः शोभनः-
सः सीतापदपङ्कजो ददतु मे श्रेयांसि सन्तानकम् ॥१२३॥

अस्माकं जनकात्मजा युवतिभिर्नर्मोक्तिता विष्टिता-
विप्राणींगुरुरङ्गनाशिषमलं संशृणवती सुस्मिता ।
श्रीमन्मैथिलराजकौतुकगृहे ग्रन्थी कृताधिष्ठिता-
सा भव्यं नितरां तनोतु सततं रामस्य वामान्विता ॥१२४॥

जो सिद्धि ऋषि मुनिवर्यों द्वारा तथा सर्वश्रेष्ठ देवगणो द्वारा भलीभांति सुसेवित तथा पूजित हैं। ब्रह्मा-शिव इन्द्रादिकों द्वारा जो श्रीखण्ड चन्दन से सदैव चर्चित होता है, जो भक्तों के भव बन्धन तथा त्रिविध ताप का हरण करने वाला सर्व तीर्थमय सुशोभित है ऐसा श्री जानकी जी का चरण कमल सदैव हमारे श्रेय कल्याण की परम्परा का विस्तार करने वाला हो ॥ १२३ ॥ जो अपनी सखी सहेली युवतियों के मधुर हास्य विनोद से भरी हुई चारों ओर से घिरी हुई हैं, जो अपने गुरुजनों की ललनाओं के तथा ब्राह्मणिओं के आशीर्वचनों को सुनकर मन ही मन मधुर-मधुर मुसकाती हैं, श्रीमिथिलेश महाराज के कौतुक गृह ( कोहवर कुञ्ज में ) अपने प्रियतम के उपरना ( चादर ) से गांठ जोड़े हुए विराजमान हैं ऐसी श्री राम के वामभाग में सुशोभित श्रीजनक राजदुलारी जी हम सबका सदैव निरन्तर भव्य सुमङ्गल करती रहे ॥ १२४ ॥ ऐसी सत्कामना करके अब इस स्तोत्र का महात्म्य सुनाते हैं—

इदं ते कथितं वत्स ! श्रीसीतारामयोः शुभम् । सहस्रनामयुगलं भाविकानां मनोज्ञदम् ॥
तस्मात्तृप्तेन भो वत्स ! वैष्णवानां महद्धनम् । गोपनीयं गोपनीयं गोपनीयं प्रयत्नतः ॥
देयं सदोपासकान् वै रसिकान्भक्तिसंयुतान् । इदं सर्वस्वपरमं न देयं चान्यमार्गिणे ॥

सीतारामसहस्रनामयुगलं यद्वैष्णवानां धनं-
ये शृणवन्ति पठन्ति पूजनपरा रामैकमाहात्म्यकाः ।
ते भक्ता कवयो धनाढ्य सुखिनो सत्पूज्यमाना वरा-
वाजीवारण सैनिकाधिपतयो विस्तारकीर्त्यायुताः ॥१२८॥

सीतारामसहस्रनामयुगलं श्रोताथवा पाठकः-
श्रद्धाभक्तियुतेन शुद्धमनसा देवादिभिर्वन्दितः ।
तस्यैवं भवति ध्रुवं हृदि हरिः संशक्तियुक्तः स्थितः-
कृत्वा पापनिवारणं कुलपतिं वैकुण्ठदायं भजेत् ॥१२६॥

गङ्गास्नानतडागकूप खननाद्दानाद्दया पिण्डनात्-
तीर्थानामटनात्प्रयागकरणा गोऽश्वादि सम्यग्व्रतात् ।

यत्पुण्यं लभते ह्याध्वरकृते चांद्रायणादि व्रतात्–
सीताराम सहस्रनामपठनात् तत्सर्वंदप्राप्यते ॥१३०॥

इति श्रीभुशुण्डिरामायणे ब्रह्मानारद सम्वादे बालकाण्डे "श्रीसीताराम युगलसहस्रनाम" स्तोत्रं सम्पूर्णम् ॥

श्रीब्रह्माजी कहते हैं हे वत्स ! नारद यह श्रीसीतारामजी का परमशुभ "युगल सहस्रनाम" स्तोत्र मैंने तुमको सुनाया है। यह भाविक भक्तों का मन हरण करने वाला परम प्रिय है, हे वत्स ! इस महा धन को प्राप्तकर श्रीवैष्णव तृप्त ( सन्तुष्ट ) हो जाते हैं, यह अत्यन्त गुप्त रखना चाहिये। श्रीरामोपासक रसिक भक्तजनों को ही देना चाहिये ! क्योंकि यह उनका सर्वस्व प्राणधन है. अन्यान्य मार्गों में भटकने वालों को कभी नहीं देना चाहिये। ( श्लोक १२५ से १२७ तक )

यह "श्रीसीताराम युगलसहस्रनाम स्तोत्र" वैष्णवों का परम धन है श्रीराम चरणों में एकाग्र चित्त से प्रीति करने वाले जो भक्तजन इसका पठन–पाठन–श्रवण–मनन करेंगे वे कवि–धनाढ्य सुखी सज्जनों द्वारा पूज्यनीय सर्व श्रेष्ठ बनेंगे उनको हाथी–घोडा–सेना–नौकर चाकर का सुख प्राप्त होगा। इसका श्रद्धा भक्ति पूर्वक शुद्ध मन से जो कोई पाठ करेंगे वे देवताओं द्वारा भी वन्दनीय बनेंगे. उनके हृदय में श्रीहरि अपनी आह्लादिनी पराशक्ति श्री जू के सहित निवास करेंगे। उनका सब पाप नष्ट हो जायगा तथा वे अन्त में परम पद वैकुण्ठ के भागीदार बनेंगे। गंगा स्नान से कुंआ तालाव खनवाने से–दान देने से–गया में श्राद्ध पिन्ड करने से सभी तीर्थों की यात्रा करने से, हाथी–घोड़ा–गायका दान देने से पूर्ण विधि पूर्वक व्रतोपवास करने से–अश्वमेधादिक महायज्ञ करने से तथा चान्द्रायणादि व्रत करने से जो पुण्य प्राप्त होता है। वह पुण्य "श्रीसीताराम युगल सहस्रनाम" स्तोत्र का पाठ करने से सहज ही प्राप्त होता है ( श्लोक १२८ से १३० तक )

**इस प्रकार यह श्रीभुशुण्डीरामायण बालकाण्ड के श्रीब्रह्मानारद संवादात्मक 'श्रीसीताराम युगलसहस्रनाम स्तोत्र" सम्पूर्ण हुआ।**